=अथ विवाहपद्धति प्रारम्भ=

यहपोथीशहरबनारसदिवाकरछापाखानेमेविवाहपधतीछापागयालिषा
महीपनारायणपांडे शिवचरकेइहासाकीनमहल्लाभदैनीकालीमहलकेपास
छापनेवालेबदलसोधापंडितवटुकवहुशुद्धकरिके यहपोथीजासकेलेनाहोयसो
चौककेफाटकपरकुंजगलीकेपासरामचरनकेदुकानपरमिलैगी ॥ संवत १९२२मी:
वैशाषवदी २ के समाप्तम

वि·पं· ॥श्रीगणेशायनमः सुमुखश्चैकदंतश्चकपिलोगजकर्णकः लंबोदरश्चविकटोविघ्ननाशोविनायकः १ धूम्रकेतु
१ र्गणाध्यक्षोभालचंद्रोगजाननः द्वादशैतानिनामानियः पठेच्छृणुयादपि २ विद्यारंभेविवाहेचप्रवेशेगमनेत
थासंग्रामेसंकटेचैवविघ्नस्तस्यनजायते ३ स्वस्तिश्रीमहागणाधिपतयेनमः हरिः ॐ गणानांत्वागणपति
थंहवामहे प्रियाणांत्वाप्रियपतिथंहवामहेनिधीनांत्वानिधिपतिथंहवामहे वसोमम आहमजानिगर्भधमात्व
मजासिगर्भधम् १ सुमुहूर्तमस्तुतथास्तु ॐ विश्वानिदेवसवितर्दुरितानिपरासुवयद्भद्रंतन्नआसुव स्वस्तिनइंद्रोवृद्ध
श्रवाः स्वस्तिनः पूषाविश्ववेदाः स्वस्तिनस्तार्क्ष्योऽरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु दीर्घायुस्त्वा यबलायव
र्चसेसुप्रजा स्त्वायसहस्रायु रथोजीवशारदः शतानत् द्यौः शांतिरंतरिक्षथंशांतिः पृथ्वीशांतिरापःशांतिरोषधयःशांति
र्वनस्पतयः शांतिर्विश्वेदेवाःशांतिर्ब्रह्मशांतिः सर्वथंशांतिः सामाशांतिरेधिद्विपदःशंचतुष्पदेभ्यः शुभशांतिर्वरदाभ
वतु ।१। इतिविश्वानसंपूर्णम् अथातः संप्रवक्ष्यामिगणायामंसुखावहं कामकेमासकेयज्ञेविवाहेव्रतसंयमे ।
।१। आदौगणेश्वरंपूज्यसर्वकामफलप्रदं मासमासाधिपंदेवं णापत्यंलभेन्नरः २ येनासौपूजितोयज्ञेमा राम·
साचार्यैः प्रपूजितः कोसौमासपतिर्देवोह्यत्रधूपेनधूपितः ३ ज्येष्ठमासेकृतंपूज्ययज्ञकालेसनातनं मंडलंप्र १

थमं पूज्य कोष्टद्वादशमुत्तमं ४ सिंदूरेणार्चितोदेवदूर्शानेतुविनायकः ग्रहपुत्रंततः स्थाप्यमासेमासेविकंफलं
५ गणाधिपंमार्गशीर्षेतथापौषेविनायकम् गजवक्त्रंचमाघेचभालचंद्रंचफाल्गुने ६ चैत्रमासेतुवेदांगंवैशा
खेशिवसूनुकं ज्येष्ठेशिवसुतंपूज्यआषाढेहरनंदनं ७ श्रावणेतापसंदेवंभाद्रेचमोदकप्रियंआश्विनेच
महावीर्यंमहावीर्यंचकार्तिके ८ विघ्नहर्तारमधिके एवंपूज्यगणेश्वरं गंधपुष्पैस्तथाधूपैः कर्पूरैर्यक्षकर्द
मैः ९ मृगमदैःकुंकुमैःशुभ्रैःसिंदूरेणविशेषतः रक्तोत्पलदलैःपूज्यविल्वपत्रेणकेशरैः १० मालतीकेत
कीपुष्पैर्हेमपुष्पैर्विचक्षणः अर्घंधूपंचदीपंचरक्तवस्त्रेणाच्छादनं ११ पूजायांकुरुतेदेवेदद्यान्मोदकभो
जनं नमोदेवगणेशायनमस्तेविघ्ननाशन १२ नमस्तेमूषकारूढशुभकारायवैनमः नमःकात्यायनीपुत्र
लंबकर्णायवैनमः १३ गजदंतविरूपात्मन्विद्याबुद्धिविचक्षण देहिमेपुत्रसौभाग्यंदेहिमेसुखसंपदम् ।
१४ इच्छासमधिपेदेवंवरंविनायकेश्वरं शत्रूणांदुष्टयेकेचिद्दुर्जनाशिवकर्षिले १५ तेषांदंडहितार्थायप्रार्थ
येत्तगणेश्वरं प्रथमंपूजागणेशस्यशांतिश्चैवविशेषतः १६ नाशयेत्सर्वदुष्टानिकात्यायणंचभवेत्सदाकुष्मे
नभाषितंपूर्वंदेवतापरिकीर्तिता १७ मंडलंयत्रयत्रेचभुक्तास्तत्रविनायकः आयुःकर्त्ताशांतिकर्तावरदोभ

वि॰ प॰ २

वघ्नजितः १८ इतिगणायागःसंपूर्णः श्रीमहागणाधिपतयेनमः जलस्नानंकारयामिगंधंसमर्पयामिअक्ष
ता न्समर्पयामिपुष्पाणिसमर्पयामि धूपमाघ्रापयामिदीपंदर्शयामि नैवेद्यंसमर्पयामिनैवेद्यांतेआच
मनंहिरण्यगर्भइतिदक्षिणांसमर्पयामि अथकलशप्रतिष्ठा ततईशानकोणेअव्रणंकलशंआक्षतविभूषि
तंसंस्थाप्य भूमिस्पर्शनमंत्रः भूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्रीपृथिवींयच्छपृथि
वींदृंहपृथिवींमाहिंसीः धान्यमसीतिधान्यंधान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वाव्यानायत्वादी
र्घामनुप्रसितिमायुषेधांदेवोवःसविताहिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनां
पयोसि तस्योपरिकलशंस्थापयेत् अथपूजनंवरुणस्योत्तंभनमसिवरुणस्यस्कंभसर्जनीस्थोवरुणस्यऋ
तसदन्यसिवरुणस्यऋतसदनमसिवरुणस्यऋतसदनमासीद इतिस्नानं गंधद्वारांदुराधर्षांनित्यपुष्टांक
रीषिणीं ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं इतिगंधं ॐ अक्षन्नमीमदंतह्यवप्रियाअधूषत अस्तोषतस्व
भानवोविप्रानविष्ठयामतियोजान्विंद्रतेहरि इत्यक्षता न्श्रीश्चतेलक्ष्मीरितिपुष्पंधूरसि धूर्वतं धूर्वतंयोस्मा
न् धूर्वतितंधूर्वयंवयंधूर्वामः देवानामसिवह्नितमंसस्नितमंपप्रितमंजुष्टतमंदेवहूतमम् इतिधूपं अग्निर्ज्यो रामः २

तिर्ज्योतिरग्निः स्वाहा सूर्योज्योति ज्योतिः सूर्यः स्वाहा अग्निर्वर्चोज्योतिर्वर्चः स्वाहा सूर्यो वर्चोज्योतिर्वर्चः स्वाहा
ज्योतिः सूर्यः सूर्योज्योतिः स्वाहा इति दीपं ॐ नाभ्या आसीदंतरीक्ष छं शीर्ष्णो द्यौः समवर्ततपद्भ्यां भूमिर्दिशः श्रो
त्रात्तथा लोकाँ अकल्पयन् इति नैवेद्यं शीतलं निर्मलं तोयं कर्पूरेण सुवासितं आचम्यतां सुरश्रेष्ठ मया दत्तं च
भक्तितः इत्याचमनं हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् सदाधार पृथिवीं द्यामुतेमां कस्मै दे
वाय हविषा विधेम इति दक्षिणा अथ कलशप्रार्थना कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः मूले तस्य स्थितो
ब्रह्मा मध्ये मातृगणाः स्मृताः १ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुंधरा ऋग्वेदोथ यजुर्वेदः सामवेदो ह्यथर्व
णः अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः देवदानवसंवादे मथ्यमाने महोदधौ ३ उत्पन्नोसि यदा कुंभ
विधृतो विष्णुना स्वयं त्वत्तः सर्वाणि तीर्थानि देवाः सर्वे त्वयि स्थिताः ४ त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रति
ष्ठिताः शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ५ आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः सर्वे पि त्वयि ति
ष्ठंति यतः कामफलप्रदाः ६ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ७ इति
कलशाभिमंत्रणम् १ ॐ गणानां त्वा गणपति छं हवामहे प्रियाणां त्वा प्रियपति छं हवामहे निधीनां त्वा निधिप

वि॰ पू॰ २

तिꣳ हवामहे वसोमम आहमजानिगर्भधमात्वमजासिगर्भधं १ श्रीगणेश इहागच्छ इहातिष्ठ ॐ ब्रह्मयज्ञा
नं प्रथमं पुरस्ताद्विसीमतः सुरुचोवेनआवः सबुध्न्याउपमाअस्यविष्ठाः शतश्चयोनिमसतश्चविवः २ ब्रह्मन्
इहा ॐ विष्णोरराटमसिविष्णोः ॥ ॐ ॥ श्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि वैष्णवमसिविष्णवेत्वा
३ विष्णो नमः शंभवायचमयोभवायचनमः शंकरायचमयस्करायचनमः शिवायचशिवतरायच ४ शिव
श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तं इष्णन्निषाणामुम्मइषाणसर्वलोकम्मइ
षाण ५ लक्ष्मि॰ पंचनद्यःसरस्वतीमपियंतिसस्रोतसः सरस्वतीतुपंचधासोदेशेभवत्सरित् ६ सरस्व॰ ॐ
नहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरएतारमग्नेः रामेनमवृधंनमृताअमर्त्यंवैश्वानरंक्षैत्रजित्यायदेवाः
७ क्षेत्रपाल॰ ॐ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंचहिरण्ययेनसविता रथेनादेवोयातिभुव
नानिपश्यन् ८ सूर्य॰ ॐ इमंदेवाअसपत्नꣳ सुवद्धं महतेक्षत्रायमहतेज्यैष्ठ्यायमह तेजानराज्यायेंद्रस्येंद्रिया
यइममममुष्यपुत्रममुष्यैपुत्रमस्यैविशएषवोमीराजासोमोस्माकं ब्राह्मणानाꣳराजा चंद्रमः ९ ॐ अग्निर्मूर्द्धा रामः २
दिवः ककुत्पतिः पृथिव्याअयम् अ पाꣳरेताꣳसिजिन्वति १० भौम॰ ॐ उद्बुध्यस्वाग्नेप्रतिजागृहीत्वमिष्टापूर्ते स

शंसजेयामयंच अस्मिन्सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत ११ बुध ॐ बृहस्पते अति यदर्यो अ
र्हाद्द्युमद्विभाति क्रतुमज्जनेषु यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् १२ गुरो० अन्नात्परि
स्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रिय
मिदं पयोमृतं मधु १३ शुक्र० शन्नो देवीरभीष्टय आपो भवन्तु पीतये शंय्योरभिस्रवन्तु नः १४ शने० कया नश्चित्र
आभुवदूती सदावृधः सखा कया शचिष्ठया वृता १५ राहो० ॐ केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे समुष
द्भिरजायथाः १६ केतो० ॐ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्द्धनं उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतात्
त्र्यंबक० जयंती मंगला काली भद्रकाली कपालिनी दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तु ते १८ कुलदे
वि० अग्निर्देवता वातो देवता सूर्यो देवता चंद्रमा देवता वसवो देवता १९ आवो देवास ईमहे वामं प्रयत्यध्वरे।
आवो देवास आशिषो यज्ञियासो हवामहे २० ब्रह्मा मुरारिस्त्रिपुरांतकारी भानुः शशी भूमिसुतो बुधश्च गुरु
श्च शुक्रः शनि राहु केतवः सर्वे ग्रहाः शांतिकरा भवंतु २१ इति नवग्रहपूजनम् ॐ गणाधिपं त्वं नमस्कृत्य नम
स्कृत्य पितामहं विष्णुं रुद्रं श्रियं देवीं वंदे भक्त्या सरस्वती १ स्थानाधिपं नमस्कृत्य दिननाथं निशाकरं धरणी

वि॰
प॰
४

गर्भसंभूतंशशिपुत्रंबृहस्पतिं २ दैत्याचार्यंनमस्कृत्यसूर्यपुत्रंमहाग्रहं राहुंकेतुंनमस्कृत्ययज्ञारंभेविशेषतः
३ शक्राद्यादेवताःसर्वामुनींश्चैवकथयाम्यहंगर्गं मुनिंनमस्कृत्यनारदंमुनिसत्तमं ४ वशिष्ठंमुनिशार्दूलंवि
श्वामित्रंतथैवच व्यासंमुनिंनमस्कृत्यसर्वशास्त्रविशारदं ५ विद्याधिकायेमुनयआचार्याश्चतपोधनाः
तान्सर्वान्प्रणमाम्येवयज्ञरक्षाकरान्सदा ६ पूर्वेरक्षतुगोविंदआग्नेय्यांगरुडध्वजःयाम्यांरक्षतुवाराहोना
रसिंहस्तुनैर्ऋते ७ वारुण्यांकेशवोरक्षेद्वायव्यांमधुसूदनः उत्तरेश्रीधरोरक्षेदीशानेतुगदाधरः ८ ऊर्द्ध्वं
गोवर्द्धनोरक्षेदधस्ताच्चत्रिविक्रमः एवंदशदिशोरक्षेद्वासुदेवोजनार्दनः ९ शंखोरक्षेच्चयज्ञाग्रेपृष्ठेखड्ग
स्तथैवच वामपार्श्वेगदारक्षेद्दक्षिणेतुसुदर्शनम्ब्रह्माणंमाधवोरक्षत्वाचार्यंपातुमाधवः अच्युतोवतुऋ
ग्वेदंयजुर्वेदमधोक्षजः ११ कृष्णश्चसामगंरक्षेदाथर्विकंचमाधवः उपद्रेष्टातुयोविप्रस्तंरुद्रोवतुसर्वदा।
१२ यजमानंसपत्नीकंकमलाक्षश्चरक्षतुरक्षाहीनंतुयत्स्थानंतत्सर्वंरक्षताद्धरिः १३ वेदमंत्रैश्चकर्तव्यार
क्षाशुभैश्चसर्षपैः आदौजपेद्गणानांत्वानिरुक्तंजातवेदसं १४ यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वदास्या रा॰म॰
नंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु १५ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं सर्वेषामविरोधेनब्रह्म ४

कर्मसमारभेत १ इतिरक्षाविधानं संपूर्णम् देवताभ्योरक्षासूत्रदानं ततोब्राह्मणानां रक्षाबंधनं कर्त्तव्यं तत्र
मंत्रः व्रतेनदीक्षामाप्नोति दीक्षयाप्नोति दक्षिणां श्रद्धां दक्षिणयाप्नोति श्रद्धयासत्यमाप्यते १ ततस्तिलकमं
त्रः ॐ युंजंति ब्रध्नमरुषं चरंतं परितस्थुषः रोचंते रोचना दिवि युंजंत्यस्य काम्या हरि विपक्षसा रथे शोणा धृष्णू
नृवाहसा १ अथवरस्नानं तेवलबुद्धिर्वै देवाः एतस्य ग्रहस्य होमं चक्रुस्ते तस्मादेतं वर्गं समृद्धिपतिः क्षिये शाइमं
ग्रहं जुह्वा वर्दंति तस्माद् रक्षणीति मंत्रोयं ॐ यदाबध्नं दाक्षयणाहिरण्यं शंनीतानिकायसुमनस्यमानाः तन्मआ
बध्नामि शतशारदायायुष्मांजरदष्टिर्यथासं १ ॐ त्वंयविष्ठदाशुषोनॄंपाहि शृणुधीगिरः रक्षतोक्षमुतन्मनाः
येनराजाबलिर्बद्धो दानवेंद्रोमहाबलः तेनत्वामनुबध्नामिरक्षेमाचलमाचल २ वाचासुवाचः यन्मयाभावि
तं सर्वं कन्यादानवचस्ततः इदमर्घमिदंपाद्यमक्षुद्रीकरणायच १ सर्वकेभवेवाचासुवाक् उदरेदशमासेस्थपोषि
तांचाष्टवर्षकाम् तुभ्यं कन्यांप्रदास्यामि देवाग्निगुरुसंनिधौ १ इतिवरवरणं ॐ अथवरमाह उपानहमुपमुंच
तु अग्नौहविर्दैयोघृतकुंभप्रवेशः तत्रस्थितोवरहोम्यः दूरेथताद्धिसंभ्रमः तस्माद्वरमाह उपानहमुपमुंचतात्
अथाग्निं कांश्यपात्रयोर्वेष्टितमादाय तुषकेशशर्करारहितायां गोमयेनोपलिप्तायां वेदिकायां स्फेनस्रुवेण

वि॰ १५

प्रागग्नप्रादेशमात्रमुल्लिखितायां उल्लेखनक्रमेणानामिकांगुष्ठाभ्यां मृदमुद्धृतायां जलेनाभ्युक्षितायांस्थाप
येत् तत्र संकल्पं कुर्यात् ॐ तत्सद्य नमः परमात्मने श्रीपुराणपुरुषोत्तमाय अद्यब्रह्मणो द्वितीयप्रहरार्द्धे श्री
श्वेतवराहकल्पे जंबूद्वीपे भरतखंडे रामराज्ये कुमारिकानाम्नि क्षेत्रे वैवस्वतमन्वंतरे अष्टाविंशतितमे कलियु
गे कलिप्रथमचरणे गंगायमुनयोः पश्चिमे तटे नर्मदाया उत्तरे तटे अमुकसंवत्सरे ऽमुकऋतौ महामांगल्यप्रदे
मासानामुत्तमे ऽमुकमासे ऽमुकपक्षे ऽमुकतिथावमुकवारे ऽमुकशर्माहं दंपत्योर्विवाहसांगतासिद्ध्यर्थमग्नि
पूजनमहं करिष्ये अग्नेः शांडिल्यगोत्र अरुणीमाता वरुणपिता अधोमुखः सन्मूर्द्ध्नि मुखोभवपाद्यादिदेयं प्र
थमे भुंजते आपो द्वितीये क्षितमेव च तृतीये तिलदर्भौ च चतुर्थे घृतभक्षणं १ पंचमे शर्करायानं षष्ठे च कीर्ति
तो यवः सप्तमे पूर्वाहुतिश्च सप्तजिह्वाः प्रकीर्तिताः २ इत्यग्निकर्म समाप्तं ॐ घटर्घ्यो भवंति आचार्य ऋत्विक्
विवाह्यो राजाग्नि यस्मात् कः कोयमाचार्यः वेदांगी ब्रह्मचारी च विद्वान् वेदविचक्षणः प्राज्ञो बुद्धिमतां श्रेष्ठ एष
आचार्य उच्यते १ कोसौ ऋत्विक् ज्ञानी बहुगुणश्चैव चतुर्मुखइव प्रभुः ललितः शीलसंयुक्त ऋत्विगेवं स उच्य
ते २ कोसौ विवाह्यः रूपवांश्च गुणी ज्ञानी विद्यावांश्च महाबली मतिमानतिश्रेष्ठश्च एवंभूतो वरः स्मृतः ३।

राम ५

कोराजाइंद्रइवप्रजापालोरामोदाशरथिर्यथा ईदृशोहिनृपोमान्यस्तस्यार्घ्यंचप्रदीयते ४ काप्रिया रामस्यच
प्रियासीताविष्णोर्लक्ष्मीस्तथैवच ईश्वरस्ययथागौरीप्रियार्घ्याकथितेदृशी ५ कोसौस्नातकः सत्यस्नात
स्तपःस्नातःस्नातस्वनियमादिषु विद्यास्नातोव्रतस्नातःसपूज्यःस्नातकोव्रती ६ अथसाला ॐअथैनंॐ
सालांप्रपादयतिस्वधेन्वेचानडुहस्यनासनीयासर्वविभृतस्तेदेवाआब्रूवंधेन्वानडुहयोवायदॐसर्वंवि
भृतोहंयदन्येषांवैसांवीर्य्यंतदेन्वनडुहयोरदधुतस्माधेन्वश्चैवापानडुंश्चभूयिष्ठभुक्तस्तध्येतत्सर्वास्यमि
वजोधेन्वानडुहयोराश्नीयांदंतगतिरिवतॐहाङ्गुनमभिपेतोजायायेगर्भनिरवधीदितिपापमक्रादिति
पापीकीर्तिस्तस्माद्धेन्वानडुहयोरस्नापातदहोवापजाङ्ज्ञोल्क्योसमामेवाहमॐसालंचेतिभवतीति १
ॐअथैनंॐसालांप्रपादयतिसजघनेनाहवनीकुमेत्यग्रेनगार्हपत्यॐसोस्यसंचरोभवत्यापैतद्यदस्यैकसं
चरोभवत्यासेत्यापाअग्निर्वैजोनिर्यज्ञस्यगर्भ्योदीक्षितोतरेणावैजोनिगर्भःसंचरतिजतिसजनैजतित्वत्यरिस्त
दावर्ततेतस्माद्यस्यैषसंचरोभवत्यासोत्यापै २ ॐअथैनंसालांप्रपादयतिसंप्रपादयतिन्वाचेयतिजाथामा
हविषायजंतितातेविस्वापरिस्रुरस्तुवत्तःगयस्कानःप्रतररणःसोपचरादर्जामितियहावैदूर्जागृहान्नःशि

वि॰ पं॰ ६

षः सांतो पापकृत्ततः प्रचीरेत्येवैतदाह ३ अन्नं हैषकौदकपात्रमुपन्नयंति यथा राज्ञ आमत्ता पोदकमाहरेद्धे
वं तद्दिति वदस्तदु तथा न कुर्जोन्मीनुषथं हते यथं कुर्वंति विप्रथवैतद्यजस्यमानुपानेति विपश्चजस्त्र र
वानीति तस्मान्नोपन्नयेत् ४ आजगाम गौतमो पत्रप्रवहनस्य जैवलेरासनमहासनमहाज्योदकमहारंस
चकार तस्माहरं चकार ५ सहोवाच ब्रह्मवृत्ते गौतम पदध्मशति सहोवाच प्रतिज्ञायते येषचरो जातु कुमार
स्यातेवाच मभाषया स्तामेब्रूहीति ६ सहोवाच देवेषु गौतम स्तद्वरेषु मानुषाणां वहीति ७ सहोवाच वि
ज्ञायते हास्ति हिरण्यस्य पात्रं गोरन्नुनां दासीनां प्रवाराणां परिधानानाम मनोभवां वहोर रात्तस्य पर्यंतस्य भ्य
वदान्यो भूदिति स वै गौतम तीर्थेनेक्षसाइत्युपेम्यहं भवन्तमिति वाच मुस्मैवपूर्वेनुपंति सहोपाणिकृत्याउ
च ८ अथ वरं वृणीते वलवद्धवै देवाएतस्याग्रेहास्यहोमं प्रेक्ष्यति तस्मादेतं वरं थं समद्धयति क्षिप्रेणाद
ममृत्यंजहदिति तस्माद्धरं वृणीते ९ अथ वरं वृणीते यथं हवेमेकंच सुषुवारोव रं वृणीते सौस्मैसर्वः
समृध्यत्तेतस्माद्धरं वृणीते १० अथवाराह्य उपानहोउपमुंचत्ते अग्नौ ह वो देवा घृत्तकुंभं प्रवेशयंचक्रुस्ततो राम॰
वराहः संबभूत स्माद्वराहो गावः संजानत्ते ह्यमे घैतदस्समभिसंजात्ते स्वमेवैतत्पस्रूनामेहोत्तद्रस्तात्पत्ति तिष्ठं ६

(ोपदरम् ॥ कुशेशताधिको हला तदर्धम् विष्टर द्वयम् ॥ १२) १३) मौ० ॥

ति तस्माद्वाराद्य उपानहौ उपमुंचते ११ इति शाला समाप्ता इति प्रति संवत्सरमहोरात्रं जो तिस्मान् ऋत्तो हि ऋ

त्ताविज्यः आसनार्हः साधुर्भवः आसनेऽहं साधुरिति वर उच्यते कः साधुः सत्यवान् शीलवान् ज्ञानवान् दृढ

वान् परस्दारपरित्यागी सोयं साधुरुच्यते दशदोषरहितश्च के दशदोषाः काणाक्षः पिंगलः अतिदीर्घः अति

ह्रस्वः कृशः क्षयीरोगी कुष्ठी दरिद्री अन्याशक्तः एतैर्दशदोषै रहितः स वरः साधुर्भवति अर्चयिष्यामो भवं

तमिति ब्रूयात् ॐ अर्चयेति वरेणोक्ते वरोपवेशनार्थं शुद्धमासनं दत्वा विष्टरमादाय ॐ विष्टरो विष्टरो वि

ष्टर इत्यन्येनोक्ते ॐ विष्टरः प्रतिगृह्यतामिति दाता वदेत ॐ विष्टरं प्रति गृह्णामि इत्यभिधाय वरो विष्टरं गृही

त्वा ॐ वर्ष्मोस्मीत्यस्य वरुण ऋषिर्विष्टरो देवतानुष्टुप् छन्द उपवेशने विनियोगः ॐ वर्ष्मोस्मि समानानामुद्य

तामिव सूर्य्यः इमं तमभितिष्ठामि यो मा कश्चाभिदासति इत्यनेनासने उत्तराग्र विष्टरोपरि वर उपविशति तत्र

उपविश्य यजमानः पाद्यमंजलिनादाय ॐ पाद्यं पाद्यमित्यन्येनोक्ते ॐ पाद्यं प्रतिगृह्यतामिति दाता वदेत्।

ॐ पाद्यं प्रतिगृह्णामि इत्यभिधाय यजमानांजलितोंजलिना पाद्यमादाय वरः विराजोदोहोसीति प्रजापति

ऋषिरापो देवता यजुः पादप्रक्षालने जलग्रहणे विनियोगः ॐ विराजो दोहोसि विराजो दोहमसीय मयि पा

सुपारी ... ... ...

... ... ...

वि. प. ८

यो ये विराजो दोह इति दक्षिणपादं प्रक्षालयति अनेनैव क्रमेणानेनैव मंत्रेण वामचरणप्रक्षालनं ततः पूर्वे
व द्विष्टरान्तरं गृहीत्वा चरणयोरधस्तात् उत्तराग्रं वरः कुर्यात् ततो दूर्वाक्षतफलपुष्पचंदनयुतार्घपात्रं गृ
हीत्वा यजमानः ॐ अर्घो अर्घो अर्घः इत्यन्येनोक्ते ॐ अर्घः प्रतिगृह्यतामिति दाता वदेत् ॐ अर्घं प्रतिगृह्णा
मीत्यभिधाय यजमानहस्तादर्घं गृहीत्वा ॐ आपस्थ युष्माभिः सर्वान्कामानवाप्नुवानीति शिरस्यक्षतादिकं
किंचिद्दत्वा ॐ समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत अरिष्टास्माकं वीरा मा परासेचि मत्पय इत्यर्घपात्रस्थं
जलमैशान्यां दिशि त्यजन्यठति तत आचमनीयमादाय ॐ आचमनीयमाचमनीयमाचमनीयमित्यन्येनोक्ते
ॐ आचमनीयं प्रतिगृह्यतामिति दाता वदेत् ततो वर आचमनीयं प्रतिगृह्णामीत्यभिधाय यजमानहस्तादाच
मनीयमादाय ॐ आमागन्यशसा संसृज वर्चसा तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनां इ
त्यनेन सकृदाचामेत् इति द्विस्तूष्णीं ततो यजमानः कांस्यपात्रस्थ दधिमधुघृतानि कांस्यपात्रपिहितान्यादाय
ॐ मधुपर्को मधुपर्को मधुपर्कः इत्यनेनोक्ते ॐ मधुपर्कः प्रतिगृह्यतामिति दाता वदेत् ॐ मधुपर्कं प्रतिगृह्णा
मि इति वरो वदेत् ॐ मित्रस्य त्वा चक्षुषा प्रतीक्षे इति यजमानकरस्थमेव निरीक्ष्य ॐ देवस्य त्वा सवितुः प्रसवे

श्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीत्यनेन मधुपर्कं गृहीत्वा वामहस्ते कृत्वा ॐ नमः श्यावास्यायान्न
शने यत्त आविद्धं तत्ते निष्कृन्तामीत्यनामिकया त्रिः प्रदक्षिणमालोड्य अनामिकाङ्गुष्ठाभ्यां भूमौ किंचिन्निः
क्षिपेत् पुनस्तथैव द्विः प्रत्येकं क्षिपेत् ततो वरः ॐ यन्मधुन इति कुत्सऋषिर्मधुपर्को देवता जगती छन्दो म
धुपर्कप्राशने विनियोगः ॐ यन्मधुनो मधव्यं परमꣳ रूपमन्नाद्यं तेनाहं मधुनो मधव्येन परमेण रूपेण
न्नाद्येन परमो मधव्योऽन्नादोऽसानीति इत्यनेन वारत्रयं मधुपर्कप्राशनं प्रतिप्राशने चैतन्मन्त्रपाठः ततो मधु
पर्कशेषमसंचरदेशे धारयेत् ततः द्विराचम्य ॐ वाङ्म आस्येस्तु ॐ नसोर्मे प्राणोस्तु ॐ अक्ष्णोर्मे चक्षुर
स्तु ॐ कर्णयोर्मे श्रोत्रमस्तु ओं बाह्वोर्मे बलमस्तु ॐ ऊर्वोर्मे ओजोस्तु ॐ अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह
सन्तु इत्यास्यादि प्रत्येकं सर्वगात्राणि स्पृष्ट्वा ॐ गौर्गौर्गौरित्यन्येनाभिहिते यजमानं च प्रत्युक्तं ततो वरः ॐ मा
ता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः प्रणावोचं चिकेतुषे जनाय मा गामनागामदि
तिं वधिष्ट मम चामुकशर्मणो यजमानस्य उभयोः पाप्मा हतः ॐ उत्सृजत तृणान्यत्तु इति तृणं क्षिपेत्
ततो वेदिकायां तुषकेशशर्करादिरहितायां हस्तमात्रपरिमितायां चतुरस्रां भूमिं कुशैः परिसमूह्य तान्

वि॰ प॰ ८

कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्फेनस्रुवेण वा प्रागग्रं प्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरु
ल्लिख्य उल्लेखनक्रमेणानामिकाङ्गुष्ठाभ्याम् पांशुमुद्धृत्य जलेनाभ्युक्ष्य ततस्तूष्णीं कांस्यपात्रस्थं वह्निं श्रोत्रि
कोगाराद् आनीय प्रत्यङ्मुखमुपसमाधाय तद्रक्षार्थं किंचिन्नियुज्य कौतुकागाराद्वरः कन्यामानीय मंडपे उप
वेशय ॐ जरां गच्छ परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावा शतं च जीवाम शरदः सुवर्चा रयिं च पुत्रा
ननुसंव्ययस्वायुष्मतीदं परिधत्स्व वासः इति पठित्वा परिधानवस्त्रं तस्यै ददाति वरः ततः ॐ या अकृन्तन्नवयन्
या अतन्वत याश्च देवीस्तन्तूनभितो ततन्थ तास्त्वा देवी जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वासः इति पठित्वोत्त
रीयं ददाति ततो वरः ॐ परिधास्ये यशो धास्ये दीर्घायुत्वाय जरदष्टिरस्मि शतं च जीवामि शरदः पुरूची रायस्पो
षमभिसंव्ययिष्ये इति पठित्वा अधोवस्त्रं वरः परिधत्ते ॐ यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती यशो
भगश्च मा विदद्यशो मा प्रतिपद्यताम् इति पठित्वोत्तरीयं परिदधाति वरः ततो वरस्य कन्यायाश्च द्विराचमनं
ततः कन्याप्रदेन परस्परं समंजेथाम् इति प्रेषणे कन्यावरयोः परस्परमभिमुखीकरणं ॐ समंजन्तु विश्वेदे सम॰ ८
वाः समापो हृदयानि नौ सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ इति वरः पठति ततः कन्याप्रदकर्तृकं यं

थिवंधनम् वंधनंकन्यावरयोः अथहस्तलेपनं मंगलाष्टकम् श्रीमत्पंकजविष्टरो हरिहरौ वायुर्महेंद्रोनलश्च
द्रोभास्करवित्तपालवरुणा प्रेताधिपादिग्रहाः प्रद्युम्नोनलकूवरः सुरगजश्चिंतामणिः कौस्तुभः स्वामीशक्तिध
रश्चलांगलधरः कुर्वंतुनोमंगलं १ गंगागोपतिगौमतीगणपतिर्गोविंदगोवर्द्धनौ गीतागोमयगोरजोगिरि
सुतागंगाधरोगौतमः गायत्रीगरुडोगदाधरगयागंभीरगोदावरी गंधर्वाग्रहगोपगोकुलगणाः कुर्वंतुनोमं
गलम् २ स्वस्तिश्रीनंदनंदनचरणकमलभक्तिरनुरागधर्ममूर्तिधर्मावतारश्री अग्रकुलकमलप्रकासेम
हतांमुकुटमणिः सभास्त्रंगारसद्विद्याविनोदेनकृतकीर्तिविस्तारित अमुकगोत्रस्यामुकप्रवरस्यामुकश
र्म्मणः प्रपौत्रायपौत्रायपुत्रायनेत्राणांनितयंशुभंयप्रुयतेरग्नि त्रयंपावनंयत्तद्विष्णुपदत्रयंत्रिभुवनेख्या
तंचरामत्रयं गंगावाहपथत्रयंसुविमलंवेदत्रयंत्रीश्वरं संध्यायांनितयंद्विजेरभियुतंकुर्वंतुनोमंगलं १
गौरीश्रीकुलदेवताचसुभगाभूमिः प्रपूर्णाशुभासाविन्नीचसरस्वतीचसुरभीसत्यव्रतारुंधतीस्वाहाजांबव
तीचरुक्मभगिनीदुःस्वप्नविध्वंसिनीवेलाचांबुनिधेः समीनमकराकुर्वंतुनोमंगलम् २ स्वस्तिश्रीनंदनं
दनचरणकमलभक्तिरनुरागधर्ममूर्त्तिधर्मावतारश्री अग्रकुलकमलप्रकाशमहतांमुकुटमणिःसभा

वि॰ शृंगारसद्विद्याविनोदेनकृतकीर्त्तिविस्तारित अमुकगोत्रस्यामुकप्रवरस्यामुकशर्म्मणः प्रपौत्रायपौत्रायपुत्राय
प॰ अश्वत्थोवटवृक्षचंदनतरुर्मंदारकल्पद्रुमोजंबूनिंवकदंबचूतसरलावृक्षाश्चयेक्षीरिणः सर्वैतेफलमिश्रि
९ तानवद्लावैभ्राजत्तराजतेरम्यंचैत्ररथंसनंदनवनंकुर्वंतुनोमंगलम् १ वाल्मीकिःसनकःसनंदनमुनिर्व्या
सोवशिष्ठोभृगुर्जाबालिर्जमदग्निरामजनको गर्गोगिरागौतमः मान्धाताभरतोनृपश्चसगरोधन्योदिली
पोनलः पुण्योधर्मसुतोययातिनहुषःकुर्वंतुनोमंगलम् २ स्वस्तिश्रीनंदनंदनचरणकमलभक्तिरनुरागध
र्ममूर्त्तिधर्मावतारस्यश्रीमदग्रकुलकमलप्रकाशमहत्तांमुकुटमणेः सभाशृंगारसद्विद्याविनोदेनकृतकीर्त्ति
विस्तारितस्य अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रायपौत्रायपुत्रायलक्ष्मीःकौस्तुभपारिजातक
सुधाधन्वंतरिश्चंद्रमागावःकामदुघाःशिवःसुरगजोरंभादिदेवांगनाःअश्वःसप्तमुखःसुधाहरिधनुःशंखा
भिधंचांबुधेःरत्नानीतिचतुर्दशप्रतिदिनंकुर्वंतुनोमंगलम् १ गंगासिंधुसरस्वतीचयमुनागोदावरीनर्मदा
कावेरीसरयुर्महेंद्रतनयाचर्मण्वतीवेदिकाक्षिप्रावेत्रवतीमहासुरनदीख्यातागयागंडकीपूर्णापुण्यजलैः राम॰
समुद्रसहिताःकुर्वंतुनोमंगलम् २ स्वस्तिश्रीनंदनंदनचरणकमलभक्तिरनुरागधर्ममूर्त्तिधर्मावतारश्रीअग्र ९

ऊर्द्ध्वंतिष्ठतो मौनिनो दृढपुरुषस्य स्कंधे अभिषेकपर्यंतं धारयेत् ततः परस्परं समीक्षेयाथां इति कन्याभिषेकानंतरं
ॐ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः वीरसूर्देवकामा स्योना शन्नो भवद्विपदे शं चतुष्पदे
सोमः प्रथमो विविदे गंधर्वो विविद उत्तरः तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः सोमोऽददद्गंधर्वाय गंधर्वोऽददद
ग्नये रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमां सा नः पूषा शिवतमामैरय या न ऊरू उशती विहर यस्यामुशंतः प्रहरा
म शेफं यस्यामु कामा बहवो निविष्ट्यै ४ इति वरपठितमंत्रांते परस्परं निरीक्षणं ततोऽग्निं प्रदक्षिणीकृत्य पश्चादग्नेरह
तवस्त्रवेष्टिततृणपूलके कटे वा तदुपरि दक्षिणं चरणं दत्वा वधूं दक्षिणतः कृत्वा तामुपवेश्य स्वयमुपविश्य व
रः पुष्पचंदनतांबूलवस्त्राण्यादाय ॐ अद्य कर्त्तव्यविवाहहोमकर्म्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुं अमु
कगोत्रममुकशर्म्माणं ब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे इति ब्राह्मणं वृणुयात्
ॐ वृतोऽस्मीति प्रतिवचनं यथाविहितं कर्म कुरु इति वरेणोक्ते ॐ करवाणीति ब्राह्मणो वदेत् ततोऽग्नेर्दक्षिणतः
शुद्धमासनं दत्वा तदुपरि प्रागग्रान् कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीयात्र त्वं मे ब्रह्मा भव इत्य
भिधाय कल्पितासने उपवेशयेत ॐ अद्य कर्त्तव्यविवाहकर्म्मणि कृताकृतावेक्षणरूपमाचार्यकर्म कर्तुं अमुक

११= गोदान प्रतिष्ठा सांगता सिद्ध्यर्थं हिरण्यमग्नि दैवतं तुभ्यमहं संप्रददे ॥ या लक्ष्मीः
सर्व भूतानां या च देवी सरस्वती ॥ सा देवी धेनु रूपेण मम पापं व्यपोहतु ॥ इति
मंत्रः ॥ हिरण्य गर्भ गर्भस्थं हेम बीजं विभावसोः ॥ अनंत पुण्य फलद मतः शांति
प्रयच्छ मे ॥ इदं रजतं चन्द्र दैवतं यज्ञ पुरुषः प्रजापतिः ॥ प्रीयताम् ॥ रौप्यं तेजः
समुत्पन्नं रौप्यं पापं हरं परम् ॥ तस्माद् रौप्य प्रदानेन प्रीयतां रुक्मिणी पतिः ॥ इदं द्र
व्यं वरुण दैवतं यज्ञ पुरुषः प्रजा पतिः प्रीयतां ॥ तदाहं वरुणो राजा द्रव्य मादित्य देवता
॥ वरीसौ विष्णु रूपेण प्रीत ग्रहणा त्वयं विधिः ॥ गोदादीति मंत्र पाठः ॥ अथ कन्या
दान ग्रहणानन्तरम् वरः गोदानं कुर्यात् ॥ हस्तेन जलाक्षत द्रव्य मादाय ॥ अद्येत्यादि ॥
अ० गोत्रः अ० शर्मा एतत्कन्या दान ग्रहण जनित दोष दूरी करणार्थम् इमां गां रुद्र दै
वतां अ० गोत्राय अ० शर्मणे ब्राह्मणाय प्रतिपादये ॥ पश्चात सांगता कृतैतत् गोदान प्रति
ष्ठा सांगता सिद्ध्यर्थम् ताम्र मयीं दक्षिणां तुभ्य महं संप्रददे ॥ यजमानाय तिलकाशि
षौ दद्यात् ॥ अन्योपि बांधवा देयो यथा संभवं ददातीति ॥ तत्र निष्क्रमण प्रभृति क
न्या दुद्द कुम्भं स्कंधे कृत्वा अग्ने दक्षिणत स्तिष्ठति, उत्तरतो वाऽभिषेक पर्यन्तम्
वरो हस्ते गृहीत्वा अग्नि समीपं गच्छति, मंत्रं वरः पठति ॥ वरः तां स्वी कृत्य वाम हस्ते
गृहीत्वा मण्डलान्निष्क्रामति ॥ अथ वधू वरो अग्नि समीपं गतो परस्परं समीक्षेया
म ॥

वि॰ पं॰ ११

गोत्रममुकशर्म्माणं आचार्य्यं पुष्पचंदनतांबूलवासोभिः आचार्यत्वेन त्वामहं वृणे ॐ वृतोस्मीति प्रतिवचनं ततः
प्रणीतापात्रं पुरतः कृत्वा वारिणा पूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्य अग्रे स्तरतः कुशोपरि निदध्यात्
ततः परिस्तरणं बर्हिषश्चतुर्थभागमादाय आग्नेयादीशानांतं ब्रह्मणोग्निपर्यंतं नैर्ऋत्याद्वायव्यान्तं अग्नितः
प्रणीतापर्य्यंतं ततोग्नेरुत्तरतः पश्चिमदिशि पवित्रछेदनार्थं कुशत्रयं पवित्रकरणार्थं साग्रमनंतरगर्भं कुश
पत्रद्वयं प्रोक्षणीपात्रं आज्यस्थाली संमार्जनार्थं कुशत्रयं उपयमनार्थं वेणीरूपं कुशत्रयं समिधस्तिस्रः स्रुव
आज्यं षट्पंचाशदुत्तरयजमानमुष्टिशतद्वयावच्छिन्नतंडुलपूर्णपात्रं पवित्रछेदनकुशानां पूर्वपूर्वदिशि क्र
मेणासादनीयं अथ तस्यामेव दिशि असाधारणवस्तून्युपकल्पनीयानि तत्र शमीपलाशमिश्रा लाजा दृषदुप
लं कुमारीभ्राता शूर्प्पं दृढपुरुषः अन्यदपि तदुपयुक्तमालेपनादिद्रव्यं ततः पवित्रछेदनकुशैः पवित्रे छित्वा
ततः सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय अनामिकांगुष्ठाभ्यां उत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्प
वनं ततः प्रोक्षणीपात्रस्य सव्यहस्तकरणं अनामिकांगुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुद्गिंगनं प्रणीतोदकेन प्रोक्ष
णीप्रोक्षणं प्रोक्षणीजलेन यथासादितवस्तुसेचनं ततोग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रनिधानं आज्य

राम॰ ११

स्थाल्यामाज्यनिर्वापः ततोधिश्रयणं ततोज्वलत्तृणादिनाहविर्वेष्टयित्वा प्रदक्षिणक्रमेणावन्हौ तत्प्रक्षेपः प
र्यग्निकरणं ततः स्रुवप्रतपनं कृत्वा संमार्जनकुशानामग्रैरंतरतो मूलैर्बाह्यतः स्रुवसंमार्जनं प्रणीतोदकेन अ
भ्युक्ष्य पुनः प्रतप्य स्रुवं दक्षिणतो निदध्यात् तत आज्यस्याग्नेरवतारणं तत आज्ये प्रोक्षणीवदुत्पवनं अवे
क्ष्य सत्यपद्रव्ये निरसनं पुनः प्रोक्षण्युत्पवनं ततः उपयमनकुशान् वामहस्तेनादाय उत्तिष्ठन्प्रजापतिं मनसा
ध्यात्वा तूष्णीमग्नौ घृताक्ताः तिस्रः समिधः क्षिपेत् तत उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्नि
पर्युक्षणं कृत्वा प्रणीतापात्रे पवित्रे निधाय पातितदक्षिणजानुः कुशेन ब्रह्मणान्वारब्धः समिद्धतमेग्नौ स्रुवेण
ज्याहुतीर्जुहोति तत्राघारादारभ्य द्वादशाहुतिषु तत्तदाहुत्यनंतरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे
प्रक्षेपः ॐ प्रजापतये स्वाहा इदं प्रजापतये इति मनसा ॐ इंद्राय स्वाहा इदमिंद्राय इत्याघारौ ॐ अग्नये स्वाहा
इदमग्नये ॐ सोमाय स्वाहा इदं सोमाय इत्याज्यभागौ ॐ भूः स्वाहा इदं भूः ॐ भुवः स्वाहा इदं भुवः ॐ स्वः स्वा
हा इदं स्वः एता महाव्याहृतयः त्वन्नो अग्न इति वामदेव ऋषिरग्निवरुणौ देवते त्रिष्टुप् छंदो होमे विनियोगः
ॐ त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः यजिष्ठो वन्हितमः शोशुचानो विश्वा द्वेषांसि प्रमु

वि प १२ मुग्ध्यस्मत् स्वाहा इदमग्निवरुणाभ्यां ॐ सत्वन्नोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौअवयक्ष्वणो
वरुणं रराणो वीहि मृडीकं सुहवोनएधिस्वाहा इदमग्नीवरुणाभ्यां अयानश्चाग्न इति वामदेवऋ
षिरग्निर्देवता त्रिष्टुप् छन्दः सर्वप्रायश्चित्तहोमे विनियोगः ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्वमित्वम
याऽअसि अयानोयज्ञंवहास्ययानोधेहिभेषजं स्वाहा इदमग्नये ॐ येतेशतंवरुणायेसहस्रंयज्ञियाःपा
शावितता महान्तस्तेभिर्नो अद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काःस्वाहा इदंवरुणायसवित्रेविष्ण
वेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यः ॐ उदुत्तमंवरुणपाशमस्मदवाधिमंविमध्यमं श्रथायअथावय
मादित्यव्रतेतवानागसोअदितयेस्यामस्वाहा इदंवरुणाय एताः प्रायश्चित्तसंज्ञकाः ततोऽन्वारब्धं विना ॐ
प्रजापतयेस्वाहा इदंप्रजापतये ॐ अग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृ
तेउदकोपस्पर्शनंअथराष्ट्रभृद्धोमः ॐ ऋताषाड् ऋतधामाग्निर्गन्धर्वः सनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट्
इदमृतासाहे ऋतधाम्नेऽग्नयेगन्धर्वाय ॐ ऋताषाड् ऋतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसोमुदोनामता
भ्यःस्वाहा इदमोषधीभ्योऽप्सरोभ्योमुद्भ्यः ॥ ❀ ॥ ❀ ॥ ❀ ॥ ॥ राम १२

॥ ❁ ॥ ❁ ॥ ॥ ॐसंहितोविश्वसामासूर्य्योगंधर्वःसनइदंब्रह्मक्षत्रंपातुतस्मै
स्वाहावाट्३इदंसंहितायविश्वसाम्नेसूर्य्यायगंधर्वाय ॐसंहितोविश्वसामासूर्य्योगंधर्वस्तस्यमरीचयोप्सरसआ
युवानामताभ्यःस्वाहा वाट्इदंमरीचिभ्योप्सरोभ्यः आयुभ्यः ४ सुषुम्णाःसूर्यरश्मिश्चंद्रमागंधर्वःसनइदंब्रह्म
क्षत्रंपातुतस्मैस्वाहावाट् इदंसुषुम्णायसूर्यरश्मयेचंद्रमसेगंधर्वाय ५ ॐसुषुम्णाःसूर्यरश्मि मागंधर्व
स्तस्यनक्षत्राण्यप्सरसोभेकुरुभ्यःस्वाहावाट् इदंनक्षत्रेभ्योप्सरोभ्यो भेकुरुभ्यः ६ ओंइषिरोविश्व
व्यचावातोगंधर्वःसनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट् इदमिषिरायविश्वव्यचसेवातायगंधर्वाय ॐइषि
रोविश्वव्यचावातोगंधर्वस्तस्यापोअप्सरसऊर्ज्जोनामताभ्यःस्वाहा इदंमरुद्भ्योऽप्सरोभ्यऊर्ग्भ्यः ८ ॐभुज्युः
सुपर्णोयज्ञोगंधर्वःसनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट्इदंभुज्यवेसुपर्णाययज्ञायगंधर्वाय ९ ॐभुज्युःसु
पर्णोयज्ञोगंधर्वस्तस्यदक्षिणाप्सरसस्तावानामताभ्यःस्वाहावाट् इदंदक्षिणाभ्योऽप्सरोभ्यस्तावाभ्यःस्वाहा १०
ॐप्रजापतिर्विश्वकर्म्मामनोगंधर्वःसनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट् इदंप्रजापतयेविश्वकर्मणेमनसे
गंधर्वाय ११ ॐप्रजापतिर्विश्वकर्म्मामनोगंधर्वःस्तस्यऋक्सामान्यप्सरसोराष्टयोनामताभ्यस्स्वाहइदम्

वि° क्षामेभ्योऽप्सरोभ्येणाष्ट्रिभ्यः इतिराष्ट्रभृतः ॥ अथजयाहोमः ॐ चित्तंचस्वाहा इदंचित्ताय ॐ चित्तिश्चस्वाहा इदंचि
प° त्त्यै ॐ आकूतंचस्वाहा इदमाकूताय ॐ आकूतिश्चस्वाहा इदमाकूत्यै ॐ विज्ञातंचस्वाहा इदंविज्ञाताय ॐ विज्ञाति
१२ श्चस्वाहा इदंविज्ञात्यै ॐ मनश्चस्वाहा इदंमनसे ॐ शाक्वरीश्चस्वाहा इदंशाक्वरीभ्यः ॐ दर्शश्चस्वाहा इदंदर्शाय ८
ॐ पौर्णमासंचस्वाहा इदंपौर्णमासाय ॐ बृहच्चस्वाहा इदंबृहते ॐ रथंतरंचस्वाहा इदंरथंतराय ॐ प्रजापति
र्जयानिंद्राय वृष्णेप्रायच्छदुग्रः पृतनाजयेषु तस्मैविशः समनमंत सर्वाः स उग्रः स इद्धव्यो बभूव स्वाहा इदंप्र
जापतये जयानिंद्राय इतिजयाहोमः उदकोपस्पर्शनं ॐ अग्निर्भूतानामधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मि
न्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्म्मण्यस्यांदेवहूत्या ॐ स्वाहा इदमग्नये भूतानाम
धिपतये ॐ इन्द्रो ज्येष्ठानामधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्
कर्मण्यस्यांदेवहूत्या ॐ स्वाहा इदमिंद्राय ज्येष्ठानामधिपतये ॐ यमः पृथिव्या अधिपतिः समावत्वस्मिन्ब प्रथम
ह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्म्मण्यस्यांदेवहूत्या ॐ स्वाहा इदंयमाय पृथिव्या राम°
मधिपतये अत्रप्रणीतोदकस्पर्शः ॐ वायुरंतरिक्षस्याधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशि १२

घ्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याꣳ स्वाहा इदं वायवेऽन्तरिक्षस्याधिपतये ॐ सूर्यो दिवोधिप
तिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याꣳ स्वाहा इ
दं सूर्य्याय दिवोधिपतये ॐ चन्द्रमा नक्षत्राणामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्या
स्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याꣳ स्वाहा इदं चंद्रमसे नक्षत्राणामधिपतये ॐ बृहस्पतिर्ब्रह्म
णोधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याꣳ
स्वाहा इदं बृहस्पतये ब्रह्मणोधिपतये ॐ मित्रः सत्वानामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्या
माशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याꣳ स्वाहा इदं मित्राय सत्वानामधिपतये ओं वरुणो
ऽपामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायाम स्मिन् कर्म्मण्यस्यां देवहू
त्याꣳ स्वाहा इदं वरुणायापामधिपतये ॐ समुद्रः स्त्रोत्यानामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रे
स्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्याꣳ स्वाहा इदं समुद्राय स्त्रोत्यानामधिपतये ॐ अ
न्नꣳ साम्राज्यानामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्म

समुद्रो जल

वि· प· १४ रायस्यां देवहूत्यां स्वाहा इदमन्नाय साम्राज्यानामधिपतये ॐ सोम ओषधीनामधिपतिः समावत्वस्मि
न् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्यां स्वाहा इदं सोमायौषधी
नामधिपतये ॐ सविता प्रसवानामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधा
यामस्मिन् कर्मण्यस्यां देवहूत्यां स्वाहा इदं सवित्रे प्र प्रसवानामधिपतये ॐ रुद्रः पशूनामधि
पतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्यां स्वा
हा इदं रुद्राय पशूनामधिपतये अत्र प्रणीतोदकस्पर्शः ॐ त्वष्टा रूपाणामधिपतिः समावत्वस्मिन् ब्रह्म
ण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्यां स्वाहा इदं त्वष्ट्रे रूपाणामधिप
तये ॐ विष्णुः पर्वतानामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन्
कर्मण्यस्यां देवहूत्यां स्वाहा इदं विष्णवे पर्वतानामधिपतये ॐ मरुतो गणानामधिपतयस्ते मावं
त्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्यां स्वाहा इदं मरु राम· १४
द्भ्यो गणानामधिपतिभ्यः ॐ पितरः पितामहाः परेवरे ततस्ततामहास्ते मावन्त्वस्मिन् ब्रह्मण्यस्मिन् क्षे

नेस्मामाशिष्यस्वां गुरोर्धायामस्मिन कर्म्मण्यस्यां देवहूत्याथं स्वाहा इदं पितृभ्यः पितामहेभ्यः परेभ्यो
वरेभ्यस्ततेभ्यस्ततामहेभ्यः अत्र प्रणीतोदकोपस्पर्शनं इत्याभ्यांतानं नामकं ॐ अग्निरैतु प्रथमो देवताना
थं सोस्यै प्रजां मुंचतु मृत्युपाशात् ५ तदयथं राजा वरुणोनुमन्यतां यथेयथं स्त्री पौत्रमघन्नरोदात्स्वाहा
इदमग्नये ॐ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः अशून्योपस्था जीवितामस्तु माता पौ
त्रमानंदमभिविबुध्यतामियथं स्वाहा इदमग्नये ॐ स्वस्तिनो अग्ने दिवा पृथिव्या विश्वानि धेह्ययथा यजत्र
यदस्यां महि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रथं स्वाहा इदमग्नये ॐ सुगं नु पंथां प्रविशन्न एहि
ज्योतिष्मध्येह्यजरन्न आयुः अपैतु मृत्युरमृतं म आगाद्वैवस्वतो नो अभयं कृणोतु स्वाहा इदं वैवस्वताय अ
त्र प्रणीतोदकस्पर्शनं ततः अंतरपटं ॐ परं मृत्यो अनु परेहि पंथां यस्ते अन्य इतरो देवयानात् चक्षुष्मते शृण्व
ते ते ब्रवीमि मा नः प्रजाथं रीरिषो मोत वीरान् स्वाहा इदं मृत्यवे अत्र प्रणीतोदकोपस्पर्शनं ततो वधूमग्रतः कृ
त्वा वरो वधूश्च द्वावपि प्राङ्मुखौ स्थितौ भवतः ततो वरांजलिपुटोपरि मिलत्वधूर्वध्वंजलिस्य घृताभिधारितव
धूभ्रातृदत्त शमीपलाशमिश्रैर्लाजैर्वधूकर्तृको मंत्रपाठपूर्वको होमः तत्र मंत्राः अर्यमणमित्यादयः वराः स्त्र

ओ॰ टी॰ ४ मार्गीजा... लाइडारे...

वि॰ षिरग्निर्देवतानुष्टुप्छंदो लाजहोमे विनियोगः ॐ अर्य्यमणं देवं कन्या अग्निमयक्षत स नो अर्यमा देवः
प॰ प्रेतो मुंचतु मा पतेः स्वाहा इदमर्य्यमणे देवाय ॐ इयं नार्य्युपब्रूते लाजानावपंतिका आयुष्मानस्तु मे प
१५ तिरेधंतां ज्ञातयो मम स्वाहा इदमग्नये ॐ इमांल्लाजानावपाम्यग्नौ समृद्धिकरणं तव मम तुभ्यं संवदनं
तदग्निरनुमन्यतामियꣳ स्वाहा इदमग्नये ततो वरो वध्वा दक्षिणहस्तं साङ्गुष्ठं गृह्णाति ॐ गृभ्णामि ते सौभ
गत्वाय हस्तं मया पत्या जरदष्टिर्यथासः भगो अर्य्यमा सविता पुरन्ध्रिर्मह्यं त्वादुर्गार्हपत्याय देवाः अ
मोहमस्मि सा त्वꣳ सा त्वमस्यमो अहं सामाहमस्मि रिक्त्वा द्यौरहं पृथिवी त्वं तावेहि विवहावहै सह रेतो
दधावहै प्रजां प्रजनयावहै पुत्रान्विन्द्यावहै बहून्ते संतु जरदष्टयः संप्रियौ रोचिष्णू सुमनस्यमानौ प
श्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतमिति मंत्रेण अथ वधूमग्नेरुत्तरतः प्राङ्मुखीं
पूर्वोपकल्पितदृषदुपले दक्षिणपादेनारोहति वरः ॐ आरोहेमम श्मानमश्मेव त्वꣳ स्थिरा भव अभितिष्ठ
पृतन्यतोऽवबाधस्व पृतनायतः इति मंत्रेण आरूढायामेव तस्यां वरो गाथां गायति ॐ सरस्वति प्रेदमव सु रा॰ म॰
भगे वाजिनीवति यां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः यस्यां भूतꣳ समभवद्यस्यां विश्वमिदं जगत् तां १५

मध्यगाथांगास्यामियास्त्रीणामुत्तमंयशः ततोग्रेवधूःपश्चाद्वरः प्रणीतोब्रह्मसहितमग्निंप्रदक्षिणांकुरुतः त
त्रवरपठनीयोमंत्रः ॐतुभ्यमग्रेपर्य्यवहन्तुनासहउनःपतिभ्याजायांदाग्नेप्रजयासह ततःपश्चादग्नेःस्थित्वा
लाजाहोमसांगुष्ठहस्तग्रहणाश्मारोहणगाथागानाग्निप्रदक्षिणानिपुनरपितथैवएतेननवलाजाहुतयः
सांगुष्ठहस्तग्रहणात्रयंगाथागानत्रयंप्रदक्षिणात्रयंसंपद्यते ततो वशिष्टलाजैःकन्याभ्रातृदत्तैरंजलिस्थ
सूर्पकोणेनवधूर्जुहोति ॐभगायस्वाहा इदंभगाय चतुर्थंभ्रमणंतूष्णींत्र्यग्रेवरःपश्चात्वधूः ततस्तूष्णींप
रिक्रमणम् ततोवरः उपविश्यब्रह्मणान्वारब्धःआज्येनप्राजापत्यंजुहुयात् ॐप्रजापतयेस्वाहा इदंप्र
जापतयेइतिमनसा अत्रप्रोक्षणीपात्रहुतशेषाज्यप्रक्षेपः ततश्चालेपनेनोत्तरोत्तरकृतसप्तमंडलेषुसप्त
पदाक्रमणंवरःकारयति वक्ष्यमाणमंत्रैः ततप्रथमेएकमिषेविष्णुस्त्वानयतु द्वितीयेद्वेऊर्जेविष्णुस्त्वान
यतु तृतीयेत्रीणिरायस्पोषायविष्णुस्त्वानयतु चतुर्थेचत्वारिमयोभवायविष्णुस्त्वानयतु पंचमेपंचपशुभ्यो
विष्णुस्त्वानयतु षष्ठेषड्ऋतुभ्योविष्णुस्त्वानयतु सप्तमेसखेसप्तपदाभवसामामनुव्रताभव विष्णुस्त्वानयतु।
ततोग्नेःपश्चादुपविष्टपुरुषस्यस्कंधेस्थितकुंभादाम्रपल्लवेनजलमानीयतेनचवरोवधूरेनांमूर्द्धन्यभिषिं

वि॰
प॰
१६

चति ॐ आपः शिवाः शिवतमाः शांताः शांततमास्तास्ते कृण्वंतु भेषजमिति पुनस्तयैवानीतजलेनात्मान
मभिषिंचति आपोहिष्ठामयोभुवस्तानऊर्ज्जेदधातन महेरणायचक्षसे योवः शिवतमोरसस्तस्यभाजय
तेहनः उशतीरिवमातरः तस्माअरंगमाम वोयस्यक्षयायजिन्वथआपोजनयथाचनः इतितिसृभिः अ
थैनांसूर्यमुदीक्षस्वेति ॐ तच्चक्षुरित्यनेन मंत्रेण वधूः सूर्यंपश्यति अस्तमिते सूर्ये ध्रुवमुदीक्षस्वेति पतिः
प्रेषानंतरं ध्रुवंपश्यति तत्र पठनीयो मंत्रः ॐ ध्रुवमसि ध्रुवंत्वापश्यामि ध्रुवैधि पोष्यामयि मह्यंत्वादाद्बृह
स्पतिर्मयिपत्याप्रजयया सहसंजीवशरदः शतमिति दृष्ट्वासायदिन पश्यति तथापि पश्यामीति ब्रूयात्
ततोवरोवधूद्दक्षिणांसोपरिहस्तंनीत्वातस्याहृदयमालभेत ममव्रतेतेहृदयंदधामिममचित्तमनुचि
त्तंतेअस्तुममवाचमेकमनाजुषस्वप्रजापतिष्ट्वानियुनक्तुमह्यमितिमंत्रेण अथैनामभिमंत्रयतिवरः
ॐ सुमंगलीरियंवधूरिमांसमेतपश्यत सौभाग्यमस्यैदत्त्वायथास्तंविपरेतनः इतिमंत्रेण अथवधूंब
लवान्कश्चित्ब्राह्मणउत्थायप्रागुदग्वानुगुप्तागारेलोहितानडुहचर्म्मणिप्रतिलोमास्तीर्णेउपवेश
येत्वरोवा ॐ इहगावोनिषीदंत्विहाश्वाइहपुरुषानिषीदंत्विहसहस्रदक्षिणोयज्ञइह पूषानिषीद १६

न्विति मंत्रेण ॥ अथ स्विष्टकृद्धोमः अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते स्रुवावशिष्टाज्यस्य प्रोक्षणी
पात्रे प्रक्षेपः अथ चतुर्होमो ब्रह्मणान्वारब्धकर्तृकः ततआचम्य संस्रवप्राशनं अथाचम्य ॐ अद्य कृतैतन
द्विवाहहोमकर्म्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय दक्षि
णां तुभ्यमहं संप्रददे इति ब्राह्मणो दक्षिणां दद्यात् स्वस्तीति प्रतिवचनं ॐ अद्य कृतैतद्विवाहहोमकर्म्म
णि आचार्य्यकर्म्मप्रतिष्ठार्थम् इदं हिरण्यमग्निदैवतं द्रव्यम् यथानामगोत्रायाऽमुकशर्म्मणे ब्राह्मणाय
दक्षिणां तुभ्यमहं संप्रददे ततो ब्रह्मग्रन्थिविमोकः ॐ सुमित्रिया न आप ओषधयः सन्तु इति पवित्रं गृहीत्वा
प्रणीताजलेन शिरः संमृज्य ॐ दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः इत्यैशान्यां प्रणीतां न्युब्जी
कुर्य्यात् ततआस्तरणक्रमेण वर्हिरुत्थाप्याज्येनाभिघार्य्य हस्तेनैव वर्हिर्होमः तत्र मंत्रः ॐ देवागातुवि
दो गातुं वित्त्वा गातुमित मनसस्पत इमं देव यज्ञᳪं स्वाहा वाते धाः स्वाहा ततउत्थाय वधूदक्षिणहस्तेन स्रुवस्य
स्थघृतपुष्पफलैः पूर्णाहुतिः तत्र मंत्रः ॐ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निं कवि
ᳪं सम्राजमतिथिं जनानामासन्नापात्रं जनयन्तु देवाः स्वाहा ततः स्रुवेण भस्मानीय दक्षिणानामिकाग्रगृही

वि: प: १७ तभस्मना ॐ त्र्यायुषं जमदग्नेरिति ललाटे ॐ कश्यपस्य त्र्यायुषं इति ग्रीवायां ॐ यद्देवेषु त्र्यायुषं इति दक्षिणां
से ॐ तन्नो अस्तु त्र्यायुषमिति हृदि एवं वध्वा अपि कुर्यात् तन्नोऽस्य स्थाने तत्ते इति विशेषः ततआचारात् श
रायांस्वयामीसुवर्णप्रेरितसिंदूरकरणं वरकर्तृकं ततोऽन्यैरपि प्रतिष्ठितस्त्रीपुरुषैः सिंदूरकरणं ग्राम्यव
चनं वरः कुर्यात् ग्राम्याः स्त्रियः अथ वेदितो मंडपमागत्य दूर्वाक्षतादि ग्रहणं ततस्त्रिरात्रमक्षारलवणाशि
नौ अधःशायिनौ निवृत्तमैथुनौ भवतः प्राङ्मुखौ वधूवरौ स्थितौ भवतः इति विवाहकर्मपद्धतिः समाप्ता
अथ चतुर्थीकर्म ततश्चतुर्थ्यामपररात्रे चतुर्थीकर्म तच्च गृहाभ्यंतर एव कार्यं तत्र उद्वर्त्तनादि कृत्वा युगका
ष्ठमुपविश्य स्नात्वा शुद्धवस्त्रं परिधाय गृहं प्रविश्य वधूवरौ प्राङ्मुखौ भवतः ॐ गणपत्यादिदेवतापूजनं त
तः कुशकंडिकारंभः तत्र क्रमः जामातृहस्तपरिमितां वेदीं कुशैः परिसमूह्य तान् कुशानैशान्यां परित्यज्य गोम
योदकेनोपलिप्य स्फ्येन स्रुवेण वा प्रागग्रप्रादेशमात्रं त्रिरुत्तरोत्तरक्रमेणोल्लिख्य उल्लेखनक्रमेणानामिका
गुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य तत्र तूष्णीं कांस्यपात्रेणाग्निमानीय स्वाभिमुखं निदध्यात् ततः पुष्पचंद राम: १७
नतांबूलवस्त्राण्यादाय ॐ अस्यां रात्रौ कर्त्तव्य चतुर्थीकर्म होमकर्मणि कृताकृतावेक्षणरूप ब्रह्मकर्म कर्त्तुं

होतृकर्मकर्त्तृममुकगोत्रममुकशर्म्माणं ब्राह्मणमेभिः पुष्पचन्दनादिभिर्ब्रह्मत्वेन होतृत्वेन च त्वामहं वृणे।
इति ब्राह्मणं वृणुयात् ॐ वृतोऽस्मीति प्रतिवचनं यथाविहितं कर्म कुर्विति वरेणोक्ते ॐ करवाणीति ब्राह्म
णो वदेत् ततोऽग्नेर्दक्षिणतः शुद्धमासनं दत्वा तदुपरि प्रागग्रान् कुशानास्तीर्य ब्रह्माणमग्निं प्रदक्षिणक्रमे
णानीय ॐ अत्र त्वं मे ब्रह्मा भव इत्यभिधाय ॐ भवानीति ब्राह्मणेनोक्ते कल्पितासने उदङ्मुखं ब्रह्माणमुप
वेशयेत् ततः पृथूदकपात्रमग्नेरुत्तरतः प्रतिष्ठाप्य प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छा
द्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात् ततः परिस्तरणं बर्हिषश्चतुर्थभागमादाय आग्ने
यादीशानान्तं ब्रह्मणोऽग्निपर्यन्तं नैर्ऋत्याद्वायव्यान्तं अग्नितः प्रणीतापर्यन्तं ततोऽग्नेरुत्तरतः पश्चिमदिशि प
वित्रछेदनार्थं कुशत्रयं पवित्रकरणार्थं साग्रमनन्तर्गर्भकुशपत्रद्वयं प्रोक्षणीपात्रं आज्यस्थाली संमार्जना
र्थं कुशत्रयं उपयमनार्थं वेणीरूपकुशत्रयं समिधस्तिस्रः स्रुवः आज्यं षट्पञ्चाशदुत्तरवरमुष्टिशतद्वयाव
च्छिन्नं तण्डुलपूर्णपात्रं एतानि पवित्रच्छेदनकुशानां पूर्वं पूर्वं दिशि क्रमेणासादनीयानि ततः पवित्रच्छे
दनकुशैः पवित्रे छित्वा प्रादेशमितपवित्रकरणं ततः सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय



कृते तकन्यादान समये महेलासनेह कुमेन वर ... रणं वरयेत् म महे सप्रहे

वि॰ प॰ १८ अनामिकांगुष्ठाभ्यामुत्तराग्रे पवित्रे धृत्वा निरुत्पवनं ततः प्रोक्षणीपात्रस्य सव्यहस्तकरणं पवित्रे गृहीत्वा त्रि
रुद्दिंगनं प्रणीतोदकेन प्रोक्षणीप्रोक्षणं ततः प्रोक्षणीजलेन यथासादितवस्तुसेचनं ततोऽग्निप्रणीतयोर्म
ध्ये प्रोक्षणीपात्रं निधाय आज्यस्थाल्यामाज्यनिर्वापः ततोऽधिश्रयणं ततो ज्वलत्तृणादिना हविर्वेष्टयित्वा प्र
दक्षिणक्रमेण पर्यग्निकरणं ततः स्रुवं प्रतप्य संमार्जनकुशानामग्रैरन्तरतो मूलैर्बाह्यतः स्रुवसंमार्जनं प्र
णीतोदकेनाभ्युक्ष्य पुनः प्रतप्य स्रुवं दक्षिणतो निदध्यात् ततः आज्यस्याग्नेरवतारणं ततः आज्ये प्रोक्षणीव
दुत्पवनं अवेक्ष्य सत्यपद्रव्ये तन्निरसनं पुनः पूर्ववत् प्रोक्षण्युत्पवनं उपयमनकुशान् वामहस्तेनादाय उ
त्तिष्ठन् प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः क्षिपेत् ततः उपविश्य प्रोक्षणीजलेनाग्नि
मप्रदक्षिणं पर्युक्ष्य पवित्रं प्रणीतापात्रे धृत्वा ब्रह्मणान्वारब्धः पातितदक्षिणजानुर्जुहुयात् तत्राघारादार
भ्याहुतिचतुष्टये तत्तदाहुत्यनन्तरं स्रुवावस्थिताज्यं प्रोक्षण्यां क्षिपेत् ॐ प्रजापतये स्वाहा इदं प्रजापतये इ
ति मनसा ॐ इन्द्राय स्वाहा इदमिन्द्राय इत्याघारौ ॐ अग्नये स्वाहा इदमग्नये ॐ सोमाय स्वाहा इदं सोमाय इ राम॰
त्याज्यभागौ ततः आज्याहुतिपंच तये स्थालीपाकाहुतौ च प्रत्याहुत्यनन्तरं स्रुवावस्थितहुतशेषघृतस्य प्रो १८

क्षणीपात्रे प्रक्षेपः ततोत्र ब्राह्मणान्वारब्धं विना ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणास्त्वा नाथका
म उपधावामि यास्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा इदमग्नये ॐ वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिर
सि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा इदं वायवे ॐ सूर्य प्रायश्चि
त्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणास्त्वा नाथकाम उपधावामि यास्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा इ
दं सूर्याय ॐ चंद्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणास्त्वा नाथकाम उपधावामि यास्यै गृहघ्नी तनू
स्तामस्यै नाशय स्वाहा इदं चंद्राय ॐ गंधर्व प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणास्त्वा नाथकाम उपधा
वामि यास्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहा इदं गंधर्वाय ततः स्थालीपाकेन जुहुयात् ॐ प्रजापतये स्वा
हा इदं प्रजापतये इति मनसा अग्न्याहुतिनवके हुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः अयं चरुहोमोत्र ब्राह्मणा
न्वारब्धकर्तृकः तत्र आज्यस्थालीपाकाभ्यां स्विष्टकृद्धोमः ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते ततः
आज्येन ॐ भूः स्वाहा इदं भूः ॐ भुवः स्वाहा इदं भुवः ॐ स्वः स्वाहा इदं स्वः एता महाव्याहृतयः ॐ त्वन्नो अग्ने व
रुणस्य विद्वान्देवस्य हेडोऽवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत्स्वा

वि॰ प॰ १९

हा इदमग्नीवरुणाभ्यां ॐ सत्वन्नो अग्नेवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ अवयक्ष्वणो वरुणꣳ रराणो
वी हि मृडीकꣳ सुहवो न एधि स्वाहा इदमग्नीवरुणाभ्यां ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्वमित्वमयाअ
सि अयानो यज्ञं वहास्ययानो धेहि भेषजꣳ स्वाहा इदमग्नये ॐ ये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वित
ता महांतस्तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुंचंतु मरुतः स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवे
भ्यो मरुद्भ्यः स्वर्केभ्यः ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳ श्रथाय अथा वयमादित्य व्रते तवाना
गसो अदितये स्याम स्वाहा इदं वरुणाय एताः प्रायश्चित्तसंज्ञकाः ॐ प्रजापतये स्वाहा इदं प्रजापतये इति म
नसा इदं प्राजापत्यम् ततः संस्रवप्राशनं ततआचम्य ॐ अस्यां रात्रौ कृतैतच्चतुर्थीहोमकर्मणि कृताकृता
वेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां
तुभ्यमहं संप्रददे इति दक्षिणां दद्यात् स्वस्तीति प्रतिवचनं ततो ब्रह्मग्रंथिविमोकः ततः सुमित्रियान आपओ
षधयः संतु इति पवित्राभ्यां शिरः संमृज्य ॐ दुर्मित्रियास्तस्मै संतु योस्मान्द्वेष्टि यं च वयं द्विष्म इत्यैशान्यां दि
शि प्रणीतां न्युब्जीकुर्यात् ततस्तरणक्रमेणाबर्हिरुत्थाप्य घृताक्तं हस्तेनैव जुहुयात् ॐ देवा गातुविदो गा

राम॰ १९

वि॰
प॰
२०

गुवित्वागातुमितनसस्पतइमंदेवयज्ञथंस्वाहावातेधाःस्वाहा आम्रपल्लवेनजलमानीयमूर्ध्निवरोवधूमभि
षिंचति ॐयातेपतिघ्नीप्रजाघ्नीपशुघ्नीगृहघ्नीयशोघ्नीनिंदितातनूर्जारिघ्नीततएनांकरोमिसाजीर्यत्वंम
यासहश्रीअमुकदेवि इतिमंत्रेण ततोवधूस्थालीपाकंप्राशयतिवरः ॐप्राणैस्तेप्राणान्संदधामि ॐ
अस्थिभिस्तेऽस्थीनिसंदधामि ॐमांसैस्तेमांसानिसंदधामि ॐत्वचातेत्वचंसंदधामि इतिमंत्रचतुष्टये
नप्रतिमंत्रांत मन्नंप्राशयेत् ततोवधूहृदयंस्पृष्ट्वावरःपठेत् ॐयत्तेसुशीमहृदयंदिविचंद्रमसिश्रितंते
दाहंतन्मांतद्विद्यात् पश्येमशरदःशतंजीवेमशरदःशतंशृणुयामशरदःशतमिति अथकंकणमो
क्षणादीनियुंनग्रंथिविमोकादीनि आचारप्राप्तानि ततउत्थायवधूदक्षिणहस्तस्पृष्टस्रुवेणघृतफलपू
र्णपूर्णेनपूर्णाहुतिंकुर्यात् ॐमूर्द्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निंकविंसम्राजमतिथिंजना
नामासन्नापात्रंजनयंतदेवाःस्वाहा इतिमंत्रेणपूर्णाहुतिः ततःस्रुवेणभस्मानीयदक्षिणानामिकाग्रगृहीतभस्मना
ॐत्र्यायुषंजमदग्नेः इतिललाटे ॐकश्यपस्यत्र्यायुषमितिग्रीवायां ॐयद्देवेषुत्र्यायुषंइतिदक्षिणबाहुमूले तन्नोअ
स्तुत्र्यायुषंइतिहृदये एवंवध्वाअपित्र्यायुषंकुर्यात् तन्नोदत्यस्यस्थानेतत्तेइतिविशेषः ततआचार्यायदक्षिणांद

